॥ रागगणानां श्रीकृष्णचन्द्रस्तवम् ॥

श्रीनारद उवाच -
भैरवाद्या रागगणाः पुरः प्राप्ता हरेः प्रभोः ।
रूपानुरूपावयवां तनुं दृष्ट्वातिहर्षिताः ॥ १॥

यत्र यत्र च तेषां वै दृष्टिः प्राप्ता हरेस्तनौ ।
तत्र स्थिता च निर्गन्तुं लावण्यान्न शशाक ह ॥ २॥

अहो श्रीकृष्णचन्द्रस्य रूपमत्यद्भुतं हरेः ।
दृष्ट्वोपवर्णनं तस्य चक्रुस्तेऽपि पृथक् पृथक् ॥ ३॥

भैरव उवाच -
भज हरिजानुद्वयमिति लक्ष्मीः ।
भजति सदाङ्के कमलकराभ्याम् ॥ ४॥

मेघमल्लार उवाच -
ऊरू विष्णो रम्भाखण्डौ हेमस्तम्भौ ध्याये वन्द्यौ ।
ओजः पूर्णौ शोभायुक्तौ वस्त्रापीतौ कृष्णस्योभौ ॥ ५॥

दीपक उवाच -
सकलसुखकरं कनकरुचिधरम् ।
प्रथितहरिपदं भजत कटितले ॥ ६॥

मालकोश उवाच -
कटी केशवाद्या हरेरस्ति तत्र नृणां नेत्रयोर्दृष्टिमानं हरन्ति ।
परं कम्पिता मन्दगच्छत्समीरैः सुनम्रेण सा सर्वचेतोहरेत्थम् ॥ ७॥

श्रीराग उवाच -
नाभेः सरः पुष्करकुण्डवच्च तल्लसत्त्रिवल्ल्यूर्मिमनोहरं पदम् ।
रोमावलिप्रोज्झितकामकाननं भजामि नित्यं हृदि राधिकापतेः ॥ ८॥

हिण्डोल उवाच -
अक्षरपङ्क्तिः किन्न्वलिपङ्क्तिः पिप्पलपत्रे मोहनमाला ।
किं कमले यच्छ्यामलरेखा किं ह्युदरे रोमावलिरेखा ॥ ९॥

भैरवरागिण्य ऊचुः
पीतपटं यत्कृष्णहरेरिन्द्रधनुर्वद्दीप्तियुतम् ।

काञ्चनशिल्पैश्चारुरुचि तद्भज नृणां दुःखहरम् ॥ १०॥

भैरवपुत्रा ऊचुः
चतुःसमुद्रा इव विश्वपूरका आनन्ददा एव चतुष्पदार्थवत् ।
ते बाहवो लोकवितानदण्डवज्जयन्ति भूधारणदिग्गजा इव ॥ ११॥

मेघमल्लाररागिण्य ऊचुः
अरुणबिम्बफलद्युतिमण्डितं भज हरेरधरं मधुरं मनः ।
नवजपादलमल्लसुविग्रहं सकलवल्लभभूमिपतेः प्रभोः ॥ १२॥

मेघमल्लारपुत्रा ऊचुः
कर्पूरकेतकसुमौक्तिकहीरकाणां
श्रीखण्डचन्द्रचपलामृतमल्लिकानम् ।
तेषां रुचेश्च परिभावमकारि पूर्वं
या दन्तपङ्क्तिरमला स्मरतां परस्य ॥ १३॥

दीपकरागिण्य ऊचुः
नयनयुगलजातं पातु नोऽहर्निशं ते
मदनशरपरोक्षं सर्वलावण्यदीक्षम् ।
परिहृतसुरवृक्षं कोटिशो लक्षलक्षं
निजजनकृतरक्षं दानदक्षं कटाक्षम् ॥ १४॥

दीपकपुत्रा ऊचुः
किं वा कुलिङ्गयुगलं नवपद्ममध्ये
दुःखक्षायाय वसतां निशितासियुग्मम् ।
जैत्रं धनुर्जयति किं मकरध्वजस्य
भ्रूमण्डलं किमथ चन्द्रमुखे परस्य ॥ १५॥

मालकोशरागिण्य ऊचुः
परिनृत्यति इन्दुमण्डले फणिपत्न्याविव लोलकुण्डले ।
कमले मकरन्दनिर्भरे भ्रमरालीव सुगण्डमण्डले ॥ १६॥

मालकोशपुत्रा ऊचुः
रविरेव खमण्डले किमु यदुभर्तुस्त्वथवा घने तडित् ।
अधितिष्ठति गण्डमण्डलं द्युतिखण्डं कलधौतकुण्डलम् ॥ १७॥

श्रीरागिण्य ऊचुः
कलिङ्गयोः खञ्जनयोः किलारादापत्यतां युद्धमभूदलीनाम् ।

तेषां गतः कीर उषःप्रफुल्ले चकास्ति पद्मेऽरुणबिम्बलिप्सुः ॥ १८॥

श्रीरागपुत्रा ऊचुः
परिकरीकृतपीतपटं हरिं शिखिकिरीटनतीकृतकन्धरम् ।
लगुडवेणुकरं चलकुण्डलं पटुतरं नतवेषधरं भजे ॥ १९॥

हिण्डोलरागिण्य ऊचुः
अतसीकुसुमोपमेयकान्तिर्यमुनाकूलकदम्बमध्यवर्ती ।
नवगोपवधूविहारशाली वनमाली वितनोतु मङ्गलानि ॥ २०॥

हिण्डोलपुत्रा ऊचुः -
हरे मत्समः पातकी नास्ति भूमौ तथा त्वत्समो नास्ति पापापहारी ।
इति त्वां च मत्वा जगन्नाथदेवं यथेच्छा भवेत्ते तथा मां कुरु त्वम् ॥ २१॥

श्रीनारद उवाच -
इति रागकृतं ध्यानं यः शृणोति पठेत्सदा ।
तन्नेत्रगोचरो याति भगवान् भक्तवत्सलः ॥ २२॥

इति गर्गसंहितायां विश्वजित्खण्डे पञ्चचत्वारिंशदध्यायान्तर्गतं
रागगणानां स्तवम् ।